केन्द्रियसंस्कृतविद्यापीठग्रन्थमाला–१५

# नारदीयसंहिता

केन्द्रियसंस्कृतविद्यापीठसंशोधनविभागसहायकेन
चौधर्युपाह्वेन राघवप्रसादेन
पाठभेदादिभिः संशोध्य संपादिता

केन्द्रियसंस्कृतविद्यापीठम्
तिरुपति
१९१७

अस्यां संहितायाम् अध्यायक्रमानुसारं प्रतिपादिताः विषया इत्थं संगृह्यन्ते।

प्रथमेऽध्याये – ग्रन्थावतारः, पाञ्चरात्रस्य सामान्यतः रूपवर्णनम्, शुद्धशुद्धेतरसृष्टिवर्णनक्रमः, पाञ्चरात्रशास्त्रस्य मायादूरीकरणे प्रभुत्वम्।

द्वितीयेऽध्याये – भगवतः आराधनविधिनिरूपणक्रमे अर्चकदैनन्दिनकृत्यवर्णनम्, मिश्रार्चनस्वरूपम्, भगवतः आवाहनविसर्जनयोः शंकासमाधाने, भगवतः सामान्यस्वरूपादिकम्, अर्चने हविर्दानबलिदानक्रमनिर्देशः। अर्चनस्य कालसंख्याकृताः पञ्चभेदाश्च।

तृतीयेऽध्याये – वासुदेवसङ्कर्षणाच्युतानिरुद्धानां चतुर्व्यूहमूर्तिमन्त्राणामुद्धारक्रमः। तेषामङ्गनिर्देशपुरस्सरं साधनप्रकारः तत्फलञ्च। विशिष्य वासुदेवमन्त्रस्य विस्तरेण वर्णनञ्च।

चतुर्थेऽध्याये – विष्णवादिद्वादशमासाधिपानां मन्त्रस्वरूपं तेषां साधनप्रकारः फलादिकञ्च।

पञ्चमेऽध्याये – मत्स्यादिप्रादुर्भावानामवतारादिमूर्तीनां च मन्त्रोद्धारक्रमः। तेषां मन्त्राणां फलादिवर्णनञ्च।

षष्ठेऽध्याये – त्रिपञ्चाशत्संख्याकानां मुद्राणां स्वरूपकल्पनप्रकारज्ञापनपुरस्सरं तासां विनियोगादिकञ्च।

सप्तमेऽध्याये – दीक्षाङ्गभूताग्निकार्ये अपेक्षितानामग्निकुण्डानां स्वरूपादिकं, प्रासङ्गिकानामन्येषां केषांचित् तत्संबद्धानां विषयाणां च वर्णनम्।

अष्टमेऽध्याये – दीक्षायामवश्यं प्रयुज्यमानानां भद्रकादिमण्डलानां स्वरूपकल्पनादिप्रकारः।

नवमेऽध्याये – अतिविस्तरेण दीक्षाप्रयोगः। तत्र तत्त्वादिशोधनक्रमे ब्रह्माण्डस्य, तत्र स्थितानां लोकादीनां च वर्णनं, अस्मिन् क्रमे वर्णाध्वादीनां निर्देशः, ब्रह्मणः स्वरूपम्, प्रकृतिपुरुषयोः स्वरूपसंबन्धादिवर्ण-

नञ्च। दीक्षायाः एव मोक्षोपायत्वं, दीक्षितस्य जीवन्मुक्तत्वम्, विस्तृतेऽस्मिन् अध्याये अनेकेषां भूगोलशास्त्रीयाणां खगोलशास्त्रीयाणां च विषयाणां वर्णनम्।

दशमेऽध्याये – संक्षिप्ततया दीक्षान्ताभिषेकविधिनिरूपणं, सप्तविधवैष्णवानां लक्षणं च। अभिषेकस्य प्रकारः वैष्णवानामाचारश्च।

एकादशेऽध्याये – समयाचारः, दीक्षितानां दैनन्दिनकृत्यम्। तत्र प्रातः शय्यात्यागानंतरं संपाद्यमानानां प्रायः सर्वेषां वैष्णवकृत्यानां संक्षिप्ततया वर्णनम्।

द्वादशेऽध्याये – भगवते अर्पणीयस्य हविषः वर्णनम्। हविष्कल्पनार्थं स्वीक्रियमाणानामन्नादीनां निर्देशः, विविधान्नकल्पनप्रकारः, हविषः भेदाः लक्षणानि च।

त्रयोदशेऽध्याये - प्रतिमाकल्पनप्रकारः, प्रतिमार्थं विभिन्नोपादानद्रव्याणां वर्णनम्, प्रतिमायाः साधारणासाधारणभेदमूलकानि स्वरूपाणि, तेषां कल्पनप्रकारश्च। अङ्गुलादिमानानां लक्षणादिकम्, बिम्बाङ्गप्रत्यङ्गमानादिकं च। वासुदेवादिदेवानां प्रतिमाकल्पनप्रकारः पीठकल्पनादिविषयाश्च। चलादिमूर्तीनां यानगतमूर्तेश्च लक्षणं कल्पनक्रमश्च। द्वादशमासाधिपानां प्रतिमाकल्पनप्रकारः। दशावतारमूर्तीनां परिवारदेवतानां च मूर्तिस्वरूपलक्षणम्। तन्त्रसङ्करनिषेधः।

चतुर्दशेऽध्याये – आलयकल्पनप्रकारः। प्रासादस्थलं तत्परीक्षणविधिः, भूमेः भेदाः, वास्तुपदकल्पनपूर्वकं तत्रस्थानां देवानां नामानि, तत्र क्रियमाणानां होमादीनां विधिनिरूपणम्, इष्टकान्यासः, गर्भन्यासक्रमः, आलयानां भेदबाहुल्यम्, आलयाङ्गानां वर्णनम्।

पञ्चदशेऽध्याये – प्रतिष्ठाविधिः, तत्र प्रशस्तः कालः, मण्डपादिकल्पनप्रकारः, प्रतिष्ठायाः भेदाः तेषां लक्षणानि च। विविधानां बिम्बानां स्थापने विशेषाः, आवरणादिदेवानां प्रतिष्ठाक्रमः, बिम्बस्य सजीवत्वप्रतिपादनं, केषांचित् सृष्ट्युत्पत्त्यादिपाञ्चरात्रीयतात्त्विकविषयाणां वर्णनम्।

षोडशेऽध्याये – शालामण्डपगोपुरादीनां प्रतिष्ठाक्रमः।

सप्तदशेऽध्याये – जीर्णसंस्कारप्रक्रिया, तस्याः भेदादिकञ्च। बालालयविधिः। आलयादिजीर्णोद्धारप्रकारः। सिद्धादिकल्पितजीर्णबिम्बाद्युद्धारक्रमे विशेषः। अत्रानुक्तानां विषयाणां पाञ्चरात्रस्य संहितान्तरेभ्यः स्वीकरणानुमतिः।

अष्टादशेऽध्याये – उत्सवाङ्गभूतस्य ध्वजारोहणस्य क्रमः। उत्सवशब्दार्थः, तस्य भेदाः। ध्वजस्तंभकल्पनादिप्रकारः, तस्य स्थापनादिकञ्च। ध्वजारोहणप्रयोगः तत्र जायमानदोषापनुत्तये प्रायश्चित्तक्रमश्च।

एकोनविंशेऽध्याये – उत्सवाङ्गभूता एव विषयाः। अङ्कुरार्पणम्, तदाधारभूतानि पात्राणि, बलिविधिः, होमक्रमः, उत्सवव्याप्तिकालः, दिनदेवताः, आचार्यसंख्यादिः, महोत्सवप्रयोगः, पुष्पयागक्रमः।

विंशेऽध्याये – स्नपनक्रमः। उत्तममध्यमाधमस्नपनानां स्वरूपनिर्देशपूर्वकं लक्षणादिप्रदर्शनं प्रयोगश्च। स्नपनपीठस्वरूपाणां स्नपनद्रव्याणाञ्च विस्तृतवर्णनम्।

एकविंशेऽध्याये – भगवदर्पणार्हाणां पुष्पाणां फलानां हविषां च परिगणनादिकम्। तत्तद्द्रव्यसंग्रहणयोग्यपात्राणां च वर्णनम्।

द्वाविंशेऽध्याये – स्नपनादिकर्मसु विहितानां वस्तूनामलाभे तत्प्रतिनिधिभूतानां वस्तूनां नामकीर्तनम्।

त्रयोविंशेऽध्याये – पवित्रोत्सवविधिः। पवित्रोत्सवप्रयोजनम्, तस्य कालः, स्थानं, तदर्थं यागशालादिकल्पनक्रमः, पवित्रकल्पनविधिः, पवित्रोत्सवप्रयोगश्च।

चतुर्विंशेऽध्याये – आराधनानुरूपं फलभेदनिरूपणं, कृष्णजयन्तीफलं, भगवते तत्तद्वस्तुनिवेदनफलम्, कार्तिकोत्सवफलम्, मार्गशीर्षैकादशीव्रतफलम्। अन्यमासेषु अनुष्ठातव्यानां विशिष्टपूजादीनां च फलम्।

पञ्चविंशेऽध्याये – प्रायश्चित्तानां निरूपणम् । भगवदाराधनादिक्रमे ज्ञाताज्ञातरूपैः जायमानन्यूनाधिक्यैः प्रयुक्तानां दोषाणां निरसनार्थं प्रायश्चित्तविधानम् ।

षड्विंशेऽध्याये – भगवन्निवेदनार्थं महाहविर्विधानं, तदर्थं मण्डपादि-कल्पनप्रकारः, हविर्निवेदनाङ्गस्नपनक्रमः, महाहविर्निवेदनप्रकारश्च ।

सप्तविंशेऽध्याये – भगवदाराधनप्रसङ्गे प्रयुज्यमानानां स्रुक्स्रुवादीनां पात्राणां स्वरूपादिकम्, आहुत्यादौ विहितानां द्रव्याणां परिमाणादिकञ्च ।

अष्टाविंशेऽध्याये – स्वतन्त्रास्वतन्त्रविमानभेदौ । तयोः लक्षण-निर्देशः । अग्न्यादीनां तत्तद्देवानां स्वतन्त्रार्चनार्थमालयबिम्बादि-कल्पनप्रकारः । तेषां संक्षेपतः अर्चनक्रमनिर्देशश्च ।

एकोनत्रिंशेऽध्याये – वैष्णवानां निषेकादिश्मशानान्ताः संस्काराः।

त्रिंशेऽध्याये – अभिगमनोपादानेज्यास्वाध्याययोगाख्यानां पञ्चका-लानां संग्रहेण स्वरूपवर्णनम् इति ।

इत्थं नारदीयसंहिता पाञ्चरात्रागमीयान् सर्वान् अपि विषयान् स्पष्टतया प्रतिपादयति। विषयप्रतिपादने सांकर्यमथवा अस्पष्टत्वं प्रायः नास्ति । एकैकस्मिन् अध्याये प्रायः एकः विषयः विषयद्वयं वा विविक्त-तया प्रतिपाद्यते । केचन विषयाः अध्यायद्वये ततोऽप्यधिकेषु वाध्यायेषु अनुवर्तन्ते । सर्वत्र क्रमपरिपालनं दृश्यते । सृष्टिक्रमः, मन्त्राणां स्वरूपादिकं, प्रादुर्भावावतारदेवानां चोत्पत्त्यादिक्रमः अन्ये च ईदृशाः विषयाः चतुर्व्यूहमवलम्ब्यैव विशदं वर्ण्यन्ते। यद्यपि सपरिकराणां मन्त्राणां वर्णनमित्येक एव विषयः तृतीयचतुर्थपञ्चमेषु अध्यायेषु अनुवर्तते तथापि अत्र विषयवर्णने काचित् समीचीना पद्धतिः अवलम्ब्यते। एकैकस्मिन् अध्याये समानप्रकृतिकाः मन्त्राः क्रमानुसारं वर्णिताः। वर्णने न कुत्रापि विषयान्तरसंस्पर्शः क्रमव्यतिक्रमो वा दृश्यते। मुद्राणां कल्पनप्रकारनिरूपणे अन्यत्र च एतादृशेषु स्थलेषु ग्रन्थः प्रायः सर्वत्र संदेहरहितः भवति। पाञ्चरात्रसंहितासु सामान्यतः हृदयाद्यङ्ग-